न्दसि माध्यन्दिनीये। उदाहरणानि यथा । विꣳशद्वामेति । ब्राह्मणेऽपि सर्वꣳ षडिति । द्वितीयाध्याये अग्ने गृहपतऽइति कण्डिकायां भूयासꣳ सुगृहपतिः । तस्यामेव शतꣳ हिमाः । तृतीयाध्याये सन्त्वमग्नऽइति कण्डिकायां सम्प्रजया सꣳ रायस्पोषेणेति । प्रथमाध्याये पृथिवि देवयजन्योषध्यास्तऽइत्यृङ्मध्ये पृथिव्याꣳ शतेन पाशैः । द्वादशाध्याये सुपर्णोसीति कण्डिकायां यजूꣳषि नाम । द्वितीयाध्याये एषा तऽइत्यृङ्मध्ये सस्रवाꣳसँव्वाजजितम् । सम्बर्हिरङ्क्ताꣳ हविषा । तृतीयाध्याये उभा वामिति कण्डिकायां इषाꣳ रयीणाम् । एकविंशत्यध्याये होता यक्षत्सुरेतसमृषभमित्यृङ्मध्ये सुरया भेषजꣳ श्रिया न मासरम् । अष्टादशाध्याये आयुर्य्यज्ञेनेत्यृङ्मध्ये कल्पताꣳ श्रोत्रँय्यज्ञेन कल्पताम् । एकादशाध्याये दꣳष्ट्राभ्याम्मलिम्लून । एकोनविंशतिमेऽध्याये पुरोडाशैर्हवीꣳष्या । तृतीयाध्याये सोमानꣳ स्वरणम् । सन्त्वमग्नऽइत्यृङ्मध्ये सम्भषीणाꣳ स्तुतेन । पञ्चमाध्याये सिꣳह्यसि । एवं रेफसँय्योगे परे ज्ञेयम् । इत्यादिषु क्रमेण दीर्घह्रस्वगुरूच्चाराः कर्त्तव्या न व्यस्ता इति । शलि रेफे च परे किम् । इन्द्राय भागं प्रजावतीरित्यनयोरनुस्वारस्याग्रे शल्रेफाभावादनुस्वार ए-

व न ठँ॰कारइति पञ्चमसूत्रं व्याख्यातम् । सूत्रार्थं कारिकाऽपि । अनुस्वारस्य ठँ॰ वेदे शलि रेफपरे भवेत् ॥ ह्रस्वाद्दीर्घो दीर्घाद्ध्रस्वः सँय्योगे च परे गुरुः ॥ ५ ॥

## शर्पूर्व्वाणामृद्धीनकादिपञ्चवर्गाणां द्वित्वं विसर्गाद्रेफयुक्तानाम् ॥ ६ ॥

पदान्तमध्ये शर्पूर्वाणां ऋकारहीनकादिपञ्चवर्गाणां विसर्गात्परेषां रेफयुक्तानामेषां च द्वित्वं स्याच्छन्दसि माध्यन्दिनीये ॥ शर्इति शषसा ज्ञेयाः । उदाहरणानि यथा । द्वितीयाध्याये अस्कन्नमद्य देवेभ्यः । आधत्तेति मध्ये पुष्क्करस्त्रजम् । समिद्सीत्यृङ्मध्ये कस्याश्चिदभिशस्त्यै । कृष्णोऽस्याखरेष्ठः । सूर्य्यस्त्वा पुरस्तात्पातु । उपहूतो द्यौष्पितोपमाम् । मयीदमित्यृङ्मध्ये दधात्त्वस्मान् इत्यादिषु कादिपञ्चवर्गाणामेव द्वित्वं शर्य्युक्तत्वान्न शषसानां विसर्गाद्रेफयुक्तानामुदाहरणानि युम्परिधिमित्यस्यामृचि मध्ये अग्ग्नेः प्रियमस्या अग्निमकण्डिकायां बृहन्तः प्रस्तरेष्ठाः । तृतीयाध्याये आ नऽएतु मनः पुनः क्त्त्वे दक्षाय जीवसे । ऋकारहीनत्त्वादिति किम् । तृतीयाध्यायेऽष्टादशकण्डिकायां व्वयस्कृतं सहस्कृतम् । चतु-

विंशत्यध्याये द्वितीयकण्डिकायां बार्हस्पत्यः पृषती-ति द्वितीयाध्याये द्वितीयर्चि ऊर्क्सम्भृदसन्त्वा स्त्वाणामी त्यत्र ककारपकारतकाराणां ऋकारयुक्तत्वान्न द्वित्वमित्यादि ज्ञेयम् । एतदर्थं कारिकापि । व्यृकादयः पञ्चवर्गाः शर्पूर्व्वा गुरवश्च ते ॥ विसर्गाश्च परे तद्वद्-युक्ताश्छन्दसि स्मृताः ॥ ६ ॥ शरादिज्ञापनार्थं प्रत्याहारसूत्राणि लिख्यते । तथा च । अइउण् । ऋ-लृक् । एओङ् । ऐऔच् । हयवरट् । लण् ञमङ-णनम् । झभञ् । घढधष् । जबगडदश् । खफछठ-थचटतव् । कपय् । शषसर् । हल् । इति माहेश्वराणि सूत्राण्यणादिसञ्ज्ञार्थानि । एषामन्त्या इतः । हलन्त्यम् । उपदेशेऽन्त्यं हलित्स्यात् । आदिरन्त्येन सहेता । अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च सञ्ज्ञा स्यात् । यथाऽणिति अइउवर्णानां सञ्ज्ञा । एवमच् हल् अलित्यादयः प्रत्याहारा ज्ञेयाः । कस्य वर्णस्य पुनः किं स्थानमित्यपेक्षायामाह । अकुहवि-सर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषा-णां मूर्द्धा । लृतुलसानां दन्ताः । उपूपध्मानीयानामो-ष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूली-यस्य जिमूलम् । नासिकाऽनुस्वारस्य । अचः स्वराः । ᳵक-

इति जिह्वामूलीयः । ≍ पइत्युपध्मानीयः । अं इत्यनुस्वारः । अः इति विसर्जनीयः इति ज्ञेयम् । पाणिनीयसूत्रे अपि द्वित्वविधायके भवतः । तथाहि । अनचि च । अचः परस्य यरो द्वे वा स्तो नत्वचि । अचो रहाभ्यां द्वे ॥ अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वास्तः । पाणिनीयद्वित्वसूत्रद्वयोदाहरणानि प्रथमाध्याये द्वितीयर्चि पृथिव्यसि मातरिश्वनो घर्म्मोऽसि विश्वधाऽअसि । इर्ठ० हस्व माह्वार्म्मो ते इत्यादि सर्वत्र ज्ञेयम् । इति षष्ठसूत्रव्याख्यानम् । एतदर्थे कारिकाद्वयमपि । पाणिनीयस्य सूत्राभ्यां द्वित्वं सर्वत्र कीर्त्तितम् । रूं विना कादयः पञ्च शर्पूर्व्वा द्वित्वमाप्नुयुः ॥ ७ ॥ विसर्गाच्च परे ते रेफयुक्ताश्छन्दसि स्मृताः ॥ पाणिनीयप्रातिशाख्यसूत्रैर्द्वित्वं प्रकीर्त्तितम् ॥ ८ ॥

## न सोऽयोश्च ॥ ७ ॥

पदान्तमध्ये वकारयकारयोः परयोः सकारस्य द्वित्वं न स्याच्छन्दसि माध्यन्दिनीये । उदाहरणानि यथा । द्वितीयाध्याये द्वितीयर्चि स्तृणामि स्वासस्थाम्भुवपतये स्वाहा । प्रथमाध्याये शर्म्मास्यवधूतर्ठ० रक्षः । धृष्टिरस्यपाग्ने इत्यादिषु सकारस्य यवयोः परयोर्न्न द्वित्वम् एवं सर्वत्र ज्ञेयम् । इति सप्तमसूत्र

व्याख्यानम् ॥

हल्युतायुतस्योः सैकारश्च ॥ ८ ॥

पदान्तमध्ये हल्युतायुतस्य ऋकारस्य ऋवर्णस्य सैकारइवोच्चारः स्याच्छन्दसि माध्यन्दिनीये । उदाहरणानि यथा द्वितीयेऽध्याये कृष्णोऽसीत्यत्र क्रेष्णोऽसीत्युच्चारो न ऋकारः । अग्नये इत्यृङ्मध्ये पितृमते इत्यत्र पित्रे मते स्वाहेत्युच्चारः । तृतीयाध्याये अयन्ते योनिर्ऋत्वियइत्यृङ्मध्ये रेत्त्वियइत्युच्चारइत्यादि सर्वत्र ज्ञेयम् । इत्यष्टमसूत्रव्याख्या सूत्रार्थे कारिकाऽपि । यवयोः परयोः सस्य द्वित्वं न स्यात्तु छन्दसि ॥ ऋकारो हल्वियुग्युग्वा सैकारश्छन्दसि स्मृतः ॥ ६ ॥

ह्रस्वं किञ्चिद्दीर्घं हल्युताकारे हल्विसर्गयुग्वर्णे च न संहितायाम् ॥ ९ ॥

पदान्तमध्ये च ह्रस्वत्वस्य किञ्चिद्दीर्घोच्चारः स्याद्धल्युतायुत आकारे परे हल्विसर्गयुग्वर्णे च परे न स्याद्वाजसनेयसंहितायाम् । अस्योदाहरणानि यथा संहितायां प्रथमाध्याये प्रथमर्चि इषे त्वोर्जे त्वा वायवस्थ देवो वइत्यादिषु इकारयकारस्याकारा ह्र-

स्वाः। अत एषां किञ्चिद्दीर्घोच्चारो न तु ह्रस्वता। सविताऽत्र तकारहल्युत आकारोऽग्रे तिष्ठति। अतः सकारविकारयोर्ह्रस्वतैव। इष्ठं० हस्त मा ह्वार्षीते। प्राप्यंयतु। अत्र पकारयकारयोः किंचिद्दीर्घता। श्रेष्ठतमाय अत्र मकारयुतआकारो ऽग्रेस्ति। अतः टकारतकारयोर्ह्रस्वतैव। अत्र यकारस्य किञ्चिद्दीर्घता। कर्म्मण ऽआप्या। अत्र मकारणकारयोर्हल्युताकारोऽग्रेऽस्ति। अतो ह्रस्वावेव। यद्दमगन्या अत्र ध्वस्य कीञ्चिद्दीर्घता। इन्द्राय भागं प्रजावतीः अत्र यकारमकारयोरग्रे हल्युत आकारोऽग्रेऽस्ति अतो ह्रस्वावेव। वस्य किञ्चिद्दीर्घता। रनमीवाऽअयक्ष्मा मा वस्तेनऽईशत इत्यादिषु रेफनकाराकाराणां किञ्चिद्दीर्घोच्चारः। ईशत मा" अत्र हल्युत्तरआकारोऽग्रेऽस्ति। अतः शतयोर्ह्रस्वतैव॥ माऽघशर्ठं० सो ध्रुवा ऽअस्मिन्गोपतौ स्यात बह्वीः। अत्र घकारपकारतकाराणां किञ्चिद्दीर्घता। यजमानस्येत्यत्र मयुतआकारोऽग्रेऽस्ति। अतो ह्रस्वतैव यजयोः स्यस्य च किञ्चिद्दीर्घता पशून्पाहि। अत्र पकारह्किारयोः किञ्चिद्दीर्घोच्चारः। द्वितीयाध्याये मित्रावरुणौ त्वोत्तरतइत्यत्र वकारुकारयोः किञ्चिद्दीर्घता। तकाररेफयोर्हलिवसर्गयुग्वर्णोऽग्रेऽस्ति। अतो ह्रस्वतैव न दीर्घोच्चारः।

प्रतिज्ञासूत्रे "ईषद्दीर्घता च भवति"। एकमात्राका-लापेक्षया किञ्चिदधिककालउच्चारणीयः सार्द्धैक-मात्रिकः कालइत्यर्थः। अतएवाध्यां संहितायां दीर्घ-पाठेऽसुकोऽधयायइति लिखितमाचार्य्यैः। इत्यादि सर्व-त्र ज्ञेयम्॥ सूत्रार्थे कारिकाऽपि। ह्रस्वं दीर्घं भवेत्किञ्चित्संहितायां परो न चेत्॥ हलसंयुतायुताका-रश्चावर्णो हलिवसर्गयुक्॥ १०॥ नवानामपि सूत्राणां परिमताः कारिकास्त्विमाः॥ केशवेन कृतास्ताः स्युर्वेदाध्ययनबोधिकाः॥ ११॥ परिभाषाङ्कसूत्रं च या-जुर्वेदं सकारिकम्॥ दैवज्ञकेशवेनेदं कृतं ह्रस्वस्वरा-न्वितम्॥ १२॥ ह्रस्वोदात्तादिभिर्भेदैः सह्रस्वस्वरलक्ष-णम्॥ शिक्षादिभिः षडङ्गैश्च विज्ञेयं वेदपाठकैः॥१३॥ इति श्रीदैवज्ञकेशवकृता प्रतिज्ञासूत्रानुसारिणी केश-वीशिक्षा समाप्ता॥

---

# अथ तत्कृता पद्यात्मिका शिक्षा ॥

अनुदात्तादुदात्ताच्चेत्स्वरितोत्तर एव च ॥ हृच्छिरः कर्णमूलेषु न्यसेद्धस्तमसंशयम् ॥ १ ॥ अनुदात्तादुदात्त श्चेदनुदात्तपरस्तथा ॥ अनुदात्तं हृदि न्यस्योदात्तं वामभ्रुवि न्यसेत् ॥ २ ॥ पुनर्हृदि न्यसेन्नीचमिति शास्त्रव्यवस्थितिः ॥ प्रचितोच्चारणे न्यासो हस्तस्य नासिकाग्रतः ॥ ३ ॥ जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टो व्यञ्जनस्वरः ॥ तैरोविरामः पादवृत्तस्ताथाभाव्यस्तथाऽष्टमः ॥ ४ ॥ एतेषां लक्षणान्याहुः कात्यायनमुनीश्वराः ॥ तत्र जात्यादिसञ्ज्ञानां चतुर्णां दर्शने करम् ॥ ५ ॥ तिर्य्यञ्चङ्गमयेद्धीमान्पितृदानवदेव हि ॥ मनुष्यदानमिव चेदुदात्तः प्रत्ययः स्वरः ॥ ६ ॥ आद्यान्तस्थस्य जोच्चारः पदादौ पठितस्य च ॥ उपसर्गपरो यस्तु यस्य छन्दसि नेष्यते ॥ ७ ॥ पदस्याद्यन्तमध्ये स्याद्दरहैः सँय्युतस्य च ॥ द्विर्भावे ऽप्येवमेव स्यादिति कात्यायनश्रुतिः ॥ ८ ॥ अन्तस्थानां द्वितीयस्य सैकारोच्चारणं भवेत् ॥ अयुक्तहलिभः शषसैर्ऋकारेण युतस्य च ॥ ९ ॥ एवमेव तृतीयस्य शषसैः सँय्युतस्य च ॥ सैकारोच्चारणं कुर्यादिति शास्त्रव्यवस्थितिः ॥ १० ॥

ऋकारस्य च सँय्युक्तासँय्युक्तस्यापि सर्वतः ॥ सैकारो-
च्चारणं कुर्य्याल्लकारस्य तथा भवेत् ॥ ११ ॥ अथ
चान्तस्यान्तस्त्रिविधं गुरुमध्यमलघुत्वयोच्चारः ॥ वा-
क्यस्यादिसमध्यान्त्यस्य प्रादिकपरस्य लघ्वेव स्यात् ॥
१२ ॥ वो वां वा वै मन्त्रे लघवो गुरवः पदे च विज्ञे-
याः ॥ देवो वः सविताऽऽदौ त्र्यमुदाहरणमन्येषा-
म् ॥ १३ ॥ असँय्युक्तस्य मूर्द्धन्योष्मणः खोच्चारणं म-
तम् ॥ टुत्वते सँय्युक्तस्यापि कस्य योगे ष एव हि ॥१४॥
छन्दसीत्येव खोच्चारो लोके प्रकृतिरिष्यते ॥ अनु-
स्वारस्य ठं॰कार आदेशश्छन्दसि स्मृतः ॥ १५ ॥ ज-
ष्मरेफेषु परतस्तस्य त्रैविध्यमुच्यते ॥ ह्रस्वाद्दीर्घाद्दीर्घ-
ह्रस्वो गुरौ च परतो गुरुः ॥ १६ ॥ ऋकारपरऊष्मा-
न्त्ये दीर्घाद्दीर्घोऽपि जायते ॥ परसवर्णे ह्यनुस्वारस्ये-
षत्प्रकृतिरुच्यते ॥ १७ ॥ अणुमात्रमनुस्वारो ह्युत्त
मं चाणुमात्रकम् ॥ शषसे च कखपफे विसर्गः सन्ति
यत्र च ॥ १८ ॥ वाचो विरामः कर्त्तव्यस्तत्रेषच्छ्रुतिचो-
दनात् ॥ सँय्युक्तस्य पदाद्यस्य चाकारस्य प्रतीयते ॥
१९ ॥ ईषद्दीर्घतयोच्चारः कात्यायनमुनेर्गिरा ॥ आस्ति-
कस्य मुनेर्वंशे जातो दैवज्ञगोकुलः ॥ २० ॥ तत्सुतेन
केशवेन कृता सम्यक् शुभाप्तिनाम् ॥ प्रीत्यर्थं सुधियां
कारिकावली निर्म्मला शुभा ॥ २१ ॥ इति श्री आ-

त्निकमहर्षिवंशोद्भवदैवज्ञगोकुलचन्द्रसुतदैवज्ञकेशवरा-
मज्ञाता कारिकावली सम्पूर्णा ॥

---

# अथ मल्लशर्म्मकृता शिक्षाऽऽरभ्यते ॥

---

नत्वा गणपतिं देवं ध्यात्वा श्रीकुलदेवताम् ॥ मल्लशर्म्मा हस्तपूर्वां करोमि स्वरप्रक्रियाम् ॥ १ ॥ नत्वा-विघ्नहरं सदा शुभकरं सर्वस्य कामप्रदं स्मृत्वा श्रीगुरुपादुकां सुललितां ध्यात्वा परां देवताम् ॥ वेदे वाजसनेयके त्वधिकृता विप्राश्च ये सत्तमास्तेषामेव कृते कृता न कुधियां हस्तस्वरप्रक्रिया ॥ २ ॥ अथ साधारणनियमः, तथा प्रातिशाख्ये मनुः । ब्रह्मणः प्रणवं कुर्य्यादादावन्ते च सर्वदा ॥ स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते ॥ ३ ॥ तथा उत्तानपाणिं फणवत्कृत्वा सह शलाकया ॥ गुरुं प्रणम्य मनसा ततः स्वाध्यायवान्भवेत् ॥ ४ ॥ अत्र जपादौ हस्तस्वरवर्णहीनस्यानधिकारत्वं रावणेन स्वराङ्कुशे याज्ञवल्क्येन शिक्षायां च बोधितम् । तथा हि हस्तहीनं तु योऽधीते हस्तस्वर (१) विवर्ज्जितम् ॥ ऋग्यजुः सामभिर्दग्धो वियोनिमधिगच्छति ॥ ५ ॥ इति याज्ञवल्क्यशिक्षायां चोक्तम् । जपादौ नाधिकारोऽस्ति सम्यक् पाठमजानतः ॥ इत्युक्तं प्रातिशाख्ये । मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या-

---

(१) स्वरवर्ण इति 'ख' पुस्तकपाठः ॥

प्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ६ ॥ इत्यपि तत्रैवोक्तम् । एतेन हस्तस्वरवर्णयुक्तएव वेदोऽध्येतव्य इत्यतो हस्तस्वरप्रक्रियोच्यते । तत्र तावद्धस्तस्वरस्य मूलस्थानं श्लोकैकेन कथ्यते । तथा । आदौ हस्तं न्यसेन्मध्ये स्थितिरेषा सनातनी । ततः स्वरानुकूल्येन गतिस्तस्य न संशयः ॥ ७ ॥ इति मूलस्थानम् । अधस्तात्प्रव्रजन्पूर्वोमूर्द्धान्मध्ये च तिष्ठति ॥ मध्यतो दक्षिणं गच्छेद्दक्षिणाद्याति चोत्तरे ॥ ८ ॥ दृष्ट्वा जात्यस्वरं शीघ्रं मध्यतो याति चोत्तरम् ॥ उत्तराद्यात्यधो हस्तं स्वरं दृष्ट्वा च दक्षिणे ॥ ९ ॥ अर्द्धन्युब्जे ततः पाणिरधस्ताद्याति दक्षिणे ॥ सम्पूर्णे सत्यधो गच्छेदधस्ताच्च न संशयः ॥ १० ॥ सिं ह्यसि प्रतीकं च ह्यवसानं विना करम् ॥ मध्यतो याति सर्वत्र व्यूर्द्धमेव सुनिश्चितम् ॥ ११ ॥ अनुदात्तसमूहो यान्वर्णानाश्रित्य तिष्ठति ॥ ते युक्तास्तं परित्यक्तुमशक्ता निजबन्धुवत् ॥ १२ ॥ स्वरितेऽप्येवमेव स्याद्दक्षिणांसे विशेषतः ॥ न च पूर्वोक्तनियमो विद्यतेऽत्रेति निश्चितम् ॥ १३ ॥ प्रतीकेऽपि विशेषोक्तिर्मन्यते वाऽनुवर्त्तिनम् ॥ १४ इति सामान्यविधिः ॥ एकारेण समा रेखा मूर्द्धि वर्णस्य या स्थिता ॥ वामगान्तां विजानीयादूर्ध्वगां ह्यूर्द्धसंस्थिताम् ॥ १५ ॥ ति-

र्य्यग्रेखा च वर्णस्य पादपार्श्वे स्थिता तु या ॥ ऊर्द्ध्वरेखा-
सहायेन तस्यास्तु स्यादधो गतिः ॥ १६ ॥ वामरेखा-
सहायेन गतिस्तस्यास्तु दक्षिणे ॥ बिन्दोर्गतिश्च जात्य-
स्य मध्ये स्यादिति निश्चितम् ॥ १७ ॥ अर्द्धन्युब्जस्य
पूर्णस्य दक्षिणः स्यात्त्वधो गतिः । इति चतुस्स्वरगतिः ।
पूर्णार्द्धन्युब्जजात्यानां सञ्ज्ञा सम्यक्क्रमेण हि । अङ्कैः
षड्भिश्चतुर्भिश्च स्वरविद्भिरुदीरिता ॥ १८ ॥ इति पू-
र्णार्द्धन्युब्जजात्यानां सञ्ज्ञा ॥ अथ ह्रस्वस्वरगतिप्रमा-
णम् ॥ षडङ्गुलिप्रमाणानि दक्षिणे च तथोत्तरे ॥
ऊर्ध्वे नवाङ्गुलिर्ज्ञेया गतिः पाणेरधस्तथा ॥ १९ ॥
वामे च दक्षिणाद्याति चार्द्धेऽधस्तात्तथैव च ॥ अष्टा-
दशाङ्गुलिर्ज्ञेया गतिर्ह्रस्वस्य सुस्थिरा ॥ २० ॥ इति
ह्रस्वस्वरगतिप्रमाणम् ॥ अथ विसर्गोच्चारणप्रमाणम् ॥
ह्रस्वाद्दीर्घाच्च परतो विसर्गश्चेत्तदा बुधः ॥ ह्रस्वस्व-
रानुकूल्येनोच्चारयेत्तं सदा बुधैः ॥ २१ ॥ इति विस-
र्गोच्चारणप्रमाणम् । अथाङ्गुलिनिस्सरणम् ॥ ह्रस्वे स्व-
रितसँय्युक्ते वर्णे च सविसर्गके । कनिष्ठा तर्ज्जनी चैव
निष्काश्या हि स्वयूथतः ॥ २२ ॥ दीर्घे स्वरितसम्प्रा-
प्ते ह्येकामेव कनिष्ठिकाम् ॥ जात्ये युग्मं विशेषेण त्य-
क्तव्यमिति निश्चितम् ॥ २३ ॥ स्वरितेभ्यः क्रमेणैव
दक्षिणोत्तरगामिनी ॥ कनिष्ठा तर्ज्जनी चैव त्याज्या

तूर्द्ध्वे हि देशिनी ॥ २४ ॥ अनुदात्तयुते ह्रस्वे सस्वरा-
च्च परेऽपि वै ॥ मुच्चैः कनिष्ठिका त्याज्या सविसर्गे
द्विजोत्तमैः ॥ २५ ॥ अथ ॐकारसञ्ज्ञा ॥ ह्रस्वादग्रे
भवेद्दीर्घो दीर्घादग्रे भवेल्लघुः ॥ देवानां हृदयं त्य-
क्त्वा ॐस्याद्देव द्विलके परे ॥ २६ ॥ दीर्घे तु देशि-
नी त्याज्या चिप्रं स्याद्द्विलके लघौ ॥ मन्त्रे त्रिधा वि-
धिर्ज्ञेयो ब्राह्मणे तु द्विधा स्मृतः ॥ २७ ॥ अथ चिप्रवि-
चारः ॥ तर्ज्जन्याः पृष्ठसंश्लिष्टमङ्गुष्ठं चाग्रनामितम् ॥
तं वै चिप्रं विजानीयात्स्वरविद्भिरुदीरितम् ॥ २८ ॥
इत्यङ्गुलिनिस्सरणम् ॥ अथ रेखाभिरुदात्तानुदात्त-
स्वरितसञ्ज्ञा ॥ ऊर्द्ध्वरेखा तु वर्णस्य मूर्द्ध्नि तिष्ठति
या स्थिरा ॥ तामुदात्तं विजानीयाद्द्विस्वरे स्वरितं तु
ताम् ॥ २९ ॥ तिर्य्यग्रेखा च वर्णस्य पादपार्श्वे स्थिता
तु या ॥ अनुदात्तं विजानीयात्स्वरितं वा सहायतः ॥
३० ॥ वर्णस्य वर्त्तुलाकारं पादे तिष्ठति केवलम् ॥
स्वरितं तु विजानीयात्स्वरविद्भिरुदीरितम् ॥ ३१ ॥
अथ तकारादिमान्तेषु तर्ज्जन्यङ्गुष्ठयोगादिमुष्ट्यन्ताः
क्रियाः कथ्यते । तर्ज्जन्यङ्गुष्ठयोर्य्योगो नखयोगस्य य-
स्तयोः ॥ अङ्गुष्ठमध्ये यस्तस्या योगो भवति निश्चित-
म् ॥ ३२ ॥ अत्रैवोक्तः क्रमेणैव नैतद्देकेऽवसानगे ॥
विसर्गे च मकारान्ते मुष्टिका च तथैव च ॥ ३३ ॥

अथ विचित्रगतिः ॥ कोऽदादिति प्रतीके च कोऽसौ च अम्बकेऽपि च ॥ एपूदात्तं विजानीयात्तदन्यत्र च मध्यमम् ॥ ३४ ॥ स्वरितस्य विशेषेण स्थानं मध्ये ह्युदीरितम् ॥ मध्यतस्य बहिर्गन्तुमशक्यत्त्वमिति स्थितिः ॥ ३५ ॥ वर्णाश्च ये न तिष्ठन्ति सञ्ज्ञा तेषां तु तस्य वै ॥ स्वरितस्य विशेषेण ज्ञेयाः स्वरविशारदैः ॥३६॥ त्रयाणां च स्वराणां च त्रिधा सञ्ज्ञा विशेषतः ॥ खल्वेकस्य त्रिधा सञ्ज्ञा मध्यस्यस्वरितस्य च ॥३७॥ तत्समः स्वरजात्यश्च ह्युर्द्दन्यजो न तत्समः ॥ सोऽपि पूर्णोऽनुदात्तेन समश्चेति विधिक्रमः ॥ ३८ ॥ इति विचित्रगतिः । अथ रेफविशेषोक्तिः ॥ अक्षराणामुपरि यो वेदे रेफः प्रवर्त्तते ॥ स एव शषहर्णां विपरीतं तु यद्भवेत् ॥ ३९ ॥ इति रेफविशेषोक्तिः ॥ अथ ब्राह्मणस्वरसङ्क्षेपः ॥ वामस्था चोपरिष्ठा या मन्त्रे वर्णस्य संस्थितिः ॥ ब्राह्मणे सा तु मध्यस्था ज्ञेया मध्यस्थिताऽपि या ॥ ४० ॥ यदुत्तरमधो याति मन्त्रे याति च दक्षिणे ॥ तदेव ब्राह्मणाख्ये तु विपरीतगतिर्भवेत् ॥ ४१ ॥ जात्यं मध्ये स्थितं नित्यमूर्द्ध्वे न्युब्जं समाश्रितम् ॥ इति सङ्क्षेपनियमो ब्राह्मणेष्वेव निश्चितः ॥ ४२ ॥ इति ब्राह्मणस्वरसङ्क्षेपविधिः ॥ अथ रङ्गसञ्चाररङ्गातिरङ्गाः ॥ सुतन्वेश्चावसानस्य सार्द्धद्व्यङ्केन बिन्दुना ॥

भङ्गं स्याद्यत्र मन्त्रेण वै रङ्गस्तु भवेदिति ।। ४३ ।। महाशब्दोऽतिशब्दश्च यद्वर्णात्प्राक् प्रवर्त्तते ।। महारङ्गोऽतिरङ्गश्च सञ्ज्ञा तस्यैव निश्चिता ॥ ४४ अथ रङ्गादीनामुच्चारणे प्रमाणम्। ह्रस्वात्तु द्विगुणो दीर्घो दीर्घादेकगुणः प्लुतः ।। प्लुतादेकगुणो रङ्गो रङ्गादेकगुणाधिकः ।। ४५ ।। महाशब्देन सँय्युक्तो व्यञ्जनं चार्द्धमात्रिकम् ।। अतिरङ्गो महारङ्गाद्वृद्धो ह्येकगुणाऽधिकः ।। ४६ ।। एतत्तु किल वेदे वै ज्ञेयं पूर्णेऽपि सुस्थिरम् ।। अथ द्विस्वरक्रमः ।। द्विस्वरे स्वरहीनस्य गतिस्तूपरि चोत्तरे ।। जात्ये त्वर्द्धे च सम्पूर्णे न्युब्जे चतुस्स्वरेषु यत् ।। ।। ४७ ।। स एव नियमो ह्येकैर्द्विस्वरेऽपि च दर्शितः ॥ भेदेनैव प्रकारस्तु (१) लिपिमात्रे सुनिश्चितः ।। ४८ ।। तिर्य्यग्रेखा द्विके मध्ये मध्ये वा तिर्य्यगूर्ध्वयोः ।। उत्तरं याति सोर्द्ध्वञ्च विस्वरश्चेत्क्रमेण हि ॥ ४९ ।। अथौष्ठमकारस्थानानि ॥ म्नन्ते मिम्नातौ मोधे च मत्रं मध्यं मधौ मिधौ।। रक्षोहणि च मन्त्रे तु बलं त्यक्त्वा मलेऽपि च ॥। ५० ।। मिमन्थे च मिभर्त्ती च मिभर्यो मभयेऽपिच ।। औदुम्बर्य्यात्मके चैवं म्नह्मणे म्नाह्मणे म्हषे ।। ५१ ।। माधोस्तु महिषं मध्यां (२)म्हहन्ते च मधानके ॥ म्हहस्पतौ च

(१) त्रिमात्रे इति 'ख' पुस्तकपाठः ।।

(२) माहवोर्म्महिषम्माह्ममिति 'ख' पुस्तकपाठश्च ।।

पिमते म्हते माल्वे मभूषते ॥ ५२ ॥ मिम्भाडिति प्रमुखे च सुम्रे मध्मौ प्रमाह्वके ॥ मम्लुशे मद्रे म्नम्ने मपायो म्नह्मचर्य्यके ॥ ५३ ॥ मटे सोमे च मीभत्से क्षौमे चैय्यम्मकेऽपि च ॥ श्रमले च मलाकायां सञ्ज्ञा सप्तविभक्तिषु ॥५४॥ स्थानेष्वेतेषु शिक्षायां याज्ञवल्क्येन भाषिता ॥ ५५ ॥ अथौष्ठमकारोत्पत्तिः ॥ मकारश्चौष्ठसञ्ज्ञः स्यान्मकारं बिन्दुगर्भकम् ॥ सर्वासामाङ्गुलीनान्निस्सुरणं कार्य्यमत्र वै ॥ ५६ ॥ अथ ठकारस्थानानि ॥ पृष्ठे गोष्ठे च शौचिष्ठत्यनुष्ठाने च पिष्ठके ॥ अधिष्ठानेऽनधिष्ठाने स्वादिष्ठे च वसिष्ठके ॥ ५७ ॥ निविष्ठौष्ठनिष्ठेषु कनिष्ठायां मदिष्ठके ॥ निष्ठायां चाप्यनिष्ठायां मजाविष्ठां च षष्ठके ॥ ५८ ॥ प्रतिष्ठायां यविष्ठ्यं च वर्षिष्ठे तिष्ठतेऽपि च ॥ आपो हिष्ठे यजिष्ठे च नेदिष्ठस्त्विष्ठिनेऽपि च ॥ ५९ ॥ निष्ठीवने चाखरेष्ठः पुञ्जिष्ठे गह्वरेष्ठके ॥ ज्येष्ठे श्रेष्ठे कनिष्ठे च भूयिष्ठायान्तु पिष्ठके ॥ ६० ॥ नरिष्ठायां गरिष्ठे च भ्राजिष्ठेऽष्टविभक्तिषु ॥ सप्तस्वेव यथा प्रोक्तः सूरिभिः शब्ददर्शिभिः ॥ ६१ ॥ इति ष्ठकारस्थानानि ॥ यस्सुबोधाम्पठेन्नित्यमिमां च स्वरप्रक्रियाम् ॥ ह्रस्वपूर्वा तु तस्यैव सम्यग्वेदे गतिर्भवेत् ॥ ६२ ॥ श्रीमता कान्यकुब्जेन ह्युपमन्युवरिनश्चोच्चिणा ॥

श्रीमद्वेदस्वरूपाणां श्रीमद्वाक्पतिशर्म्मणाम् ॥ ६३ ॥
सूनुना पितृभक्तेन मल्लविप्रेण धीमता ॥ विक्रमार्क-
गताब्देषु चन्द्रवस्वगभूमिषु ॥ ६४ ॥ ऊर्ज्जमासे सि-
ते पक्षे ह्येकादश्यां शनेर्द्दिने ॥ कृतेयं बालबोधाय स्व-
हस्तस्वरप्रक्रिया ॥ ६५ ॥ इति श्रीमत्कान्यकुब्जी-
योपमन्युगोत्रीयाग्निहोत्रिखगपतितनूजपितृभक्तघाटम
पुरवासिमल्लशर्म्मकृता शिक्षा समाप्ता ॥

---

# अथ स्वराङ्कुशशिक्षाऽऽरभ्यते ॥

हेरम्बं चण्डिकां नत्वा शम्भुं सूर्य्यं हरिं गुरुम् ॥
सरस्वतीं कविवरान्वक्ष्येऽहं स्वरनिर्णयम् ॥ १ ॥ उ-
दात्तान्निहतः स्वारः स्वरितात्प्रचयो भवेत् ॥ उदा-
त्तात्स्वरितात्पूर्व्वो नान्यमापद्यते स्वरम् ॥ २ ॥ व्यञ्ज-
नैस्तु यवौ यत्र प्रयुज्येते ततः परम् ॥ अपूर्वो नीचपू-
र्वो वा जात्यः स्वारः स उच्यते ॥ ३ ॥ एदोतोरुच्चयो-
र्य्यत्र नीचोऽकारः परो यदि ॥ एकीभावे भवेत्तत्र
स्वरोऽभिनिहितस्तदा ॥ ४ ॥ इ उ वर्णौ यदोदात्तावा
पद्येते यवौ क्वचित् ॥ अनुदात्तस्वरे नित्यं विद्यात्क्षैप्र-
स्य लक्षणम् ॥ ५ ॥ इकार उच्चः पूर्व्वस्मिन्परस्मिन्नि-
यतः स च ॥ प्रश्लिष्टमाङ्कराचार्य्याः स्वरवर्णविदस्तदा ॥
६ ॥ कम्पन्ते ते च चत्वारः स्वरितोच्चोदयाः स्वराः ॥ एत-
त्सम्यक्प्रकारेण ज्ञात्वाऽसौ कम्पविद्भवेत् ॥ ७ ॥ नीचेन
स्वरितः स्वारमेकीभावेऽनुगच्छति ॥ नीचं नीचस्त्रि-
भिश्चोच्च उच्चत्वमभिगच्छति ॥ ८ ॥ उदात्तात्स्वरि-
तादस्य स्वरितोदात्तवच्छ्रुतिः ॥ प्रकृत्या निहितं चा-
ङ्कराचार्य्याः स्वरवित्तमाः ॥ ९ ॥ उदात्तपूर्व्वं यत्किञ्चि-
च्छन्दसि स्वरितं भवेत् ॥ एष सर्व बह्वस्वारस्तैरोव्य-

ञ्जन एव च ॥ १० ॥ अवग्रहात्परं यत्र स्वरितस्स्या-
दनन्तरः ॥ तैरोविरामं तं विद्यादुदात्तो यद्यवग्रहः ॥
११ ॥ स्वरे चेत्स्वरितं यत्र विवृत्त्या तत्र सँय्युतम् ॥
एतत्तु पादवृत्तस्य लक्षणं शास्त्रनिश्चितम् ॥ १२ ॥
जात्यस्वारः स जात्येन श्रुष्ट्यग्ने क्षैप्रउच्यते ॥ तेऽव-
र्द्धन्ताऽभिनिहितः प्रश्लिष्टो ह्यीन्द्र गिर्वणः ॥ १३ ॥ तै-
रोविरामो विष्कभिते तैरोव्यञ्जन ऊतये ॥ पाद-
वृत्तस्य विद्यात्तु ताऽअस्येति निदर्शनम् ॥ १४ ॥ जा-
त्योऽभिनिहितः क्षैप्रस्तैरोव्यञ्जन एव च ॥ तिरो-
विरामः प्रश्लिष्टः पादवृत्तस्तु सप्तमः ॥ १५ ॥ यत्रा-
भिनिहितात्पूर्वो ह्युदात्तो दृश्यते यदि ॥ तत्र स्वा-
रं न कुर्वीत स्थानां नेति दर्शनम् ॥ १६ ॥ एका-
क्षरसमावेशे पूर्वयोः स्वरितः स्वरः ॥ तस्योदात्ततरो-
दात्तादर्द्धमात्रार्द्धमेव वा ॥ १७ ॥ स्वरात्परं व्यञ्जनं य-
त्पञ्चमेनान्वितं यदि ॥ पूर्वस्य स्वरतो नादो न पूर्वं-
स्वरते स्वरः १८ ॥ यत्र स्वरात्परो नादः पूर्वस्वरि-
तभाक्परः ॥ तत्राक्षेपो न कर्त्तव्यो नादे जङ्घेऽ-
पि तत्परे ॥ १९ ॥ स्वरितस्यानुरूपेण कम्पं कुर्वीत
शास्त्रवित् ॥ ह्रस्वे ह्रस्वं विजानीयाद्दीर्घे दीर्घं तथैव
च ॥ २० ॥ स्वरितान्नियतं गच्छेत्स्वरितो नियत-
श्च नो ॥ द्विमात्रो यत्र दृश्येत ह्रस्वकम्पः स उच्यते ॥

२१ ॥ अनुदात्तं क्रमात्कुर्य्यात्स्वरितं ह्यवलम्बयेत् ॥ पुनर्नियतमागच्छेद्दीर्घकम्पः स उच्यते ॥ २२ ॥ जयन्तस्वामिना प्रोक्ताः श्लोकानामेकविंशतिः ॥ स्वराङ्कुशेति विख्याता बह्वृचां स्वरसिद्धये ॥ २३ ॥ एकोदात्तं पदं विद्यादेकस्वारमथापरम् ॥ कानि चोदह्युदात्तानि कनिष्ठं निहितं स्मृतम् ॥ २४ ॥ उदात्तान्निहितः स्वार्य्यः स्वारोदात्तौ न चेत्परौ ॥ स्वरितो यस्तथा भूतो ज्ञेयः सप्ताक्षतौस्त्विति ॥ इति श्री जयन्तस्वामिप्रोक्ता स्वराङ्कुशा शिक्षा समाप्ता (१)

(१) केचन रावणकृता स्वराङ्कुशा शिक्षा प्रतिपाद्यन्ते ॥

# अथ षोडशश्लोकी शिक्षाऽऽरभ्यते ॥

अथ शिक्षां प्रवक्ष्यामि वाच उच्चारणे विधिम् ॥ यथा संव्यवहारेषु स्वयं प्रोक्ता स्वयम्भुवा ॥ १ ॥ त्रयस्त्रिंश-द्रसा वर्णाः स्वरा द्वाविंशतिर्य्यमाः ॥ चत्वारश्च विसर्गोऽ-नुस्वारःॅंकःॅपस्त्रिषष्टिकाः ॥ २ ॥ समास्तेऽदिदुतो ज्ञेया ऋटत्वादीर्घल्पश्चमः ॥ एदैदोदौ तु चत्वारो ह्रस्वाः स-न्ध्यक्षराणि च ॥ ३ ॥ ह्रस्वदीर्घप्लुता भेदास्तदुदात्तो-ऽनुदात्तकाः ॥ स्वरितश्चापि ते सानुनासिकाऽननु-नासिकाः ॥ ४ ॥ इत्यष्टादशधा भेदा व्यवर्णानामि-नः स्वराः ॥ कुचुटुतुपुवर्गास्तदुत्पञ्चवर्णसङ्ग्रहः ॥ ५ ॥ इति स्वरभेदाः ॥ कुप्वन्त्यचवादिवर्गाणां व्युत्क्रमात्प-ञ्चमादितः ॥ खफाद्याश्छठथा ज्ञेया रलान्त्या हयवाः स्मृताः ॥ ६ ॥ अतश्चेतः स्वराः पूर्वी ह-लो ञमो भमो जबः ॥ खयश्चपः शसश्चैते प्रत्याहा-रास्त्वसङ्ख्यकाः ॥ ७ ॥ कादयो मान्तिकाः स्पर्शा यमा भ्र-पञ्चमान्तरे ॥ शषसहाः स्युरूष्माणोऽन्तस्था यरलवाः स्मृताः ॥ ८ ॥ कखतॅंपफतॅंपूर्वः क्रमादर्द्धविसर्गकः ॥ जिह्वामूलीयको ज्ञेयउपध्मानीयसञ्ज्ञकः ॥ ९ ॥ वि-सर्गार्द्धविसर्गानुस्वारव्यङ्गं पराश्रयम् ॥ एतत्परापरौ ह्र-

स्वौ ग्लौ दीर्घश्च गुरुस्तथा ॥ १० ॥ इति व्यञ्जभेदाः ॥ इकुविसर्ज्जनीयानां स्यात्करणं यिशु तालुकम् ॥ ऋटु-रषाणां मूर्द्धा स्यात्कण्ठ्यौ अकुहविसर्जनीयाः ॥ लृतुलसानां दन्ताः उपूपध्मानीयमोष्ठजम् ॥ ११ ॥ वो दन्तोष्ठं ञमस्यापि नासिकायमयुग्घुरः ॥ ओदौतोरपि कण्ठोष्ठं त्वेदैतोः कण्ठतालुकम् ॥ १२ ॥ जिह्वामूलीयमात्रस्य जिह्वामूलं हि चाष्टमम् ॥ सद्यो बोधकरा शिक्षा मणिभूता प्रकाशिता ॥ १३ करालो न च लम्बोष्ठो नाव्यक्तो नानुनासिकः ॥ गद्गदो बद्धजिह्वश्च प्रयोगान्वक्तुमर्हति ॥ १४ ॥ व्याघ्री दद्भिर्हरेत्पुत्रान्भीता पाताच्च पीडनात् ॥ तद्वत्प्रयोजयेद्वर्णान्स्तेन लोके महीयते ॥ १५ ॥ इति वर्णोच्चारः ॥ शिवास्यान्निःसृतां शिक्षां प्रयतो यः पठेदिह ॥ पुत्रकीर्त्तिधनायुष्मान्स्वर्गऽतिसुखमश्नुते ॥ १६ ॥ इति रामकृष्णविरचिता षोडशश्लोकी शिक्षा समाप्ता ॥

---

# अथातोऽवसाननिर्णयं व्याख्यास्यामः ॥

---

नमस्कृत्य तु तं देवं शङ्करस्य सुतं प्रभुम् ॥ यस्य प्रसादाद्देवस्य बुद्धिभेदोऽप्यभून्मम ॥ १ ॥ अवसानस्तु वक्ष्यामि यथा वदनुपूर्वशः ॥ २ ॥ इषे त्वा भूताय कुक्कुटोऽसि जनयत्यै त्वा मा भेः पृथिवि देवयजन्यदित्यै व्युन्दनमस्कन्नमद्याग्ने त्वेरग्नेऽ दब्धायो दिवि विष्णुरग्ने व्रतपतेऽन्यस्त्यैष ते रुद्र भागः स्वाहा यज्ञमेष ते गायत्रो व्वरुणस्योत्तम्भनमग्नेस्तनूः सिंहासीन्द्रघोषस्त्वा सिंह्यसि ध्रुवोऽसि रक्षोहणँव्वलगहनं स्वराडसि रक्षोहणो वो मित्रस्य मा देवीरापो वाचन्ते समुद्रङ्गच्छ मनो मे तर्प्पयत स्वाङ्कृतोऽस्युपयामगृहीतोऽस्याग्रयणः सोमः पवते मित्रावरुणाभ्यान्त्वाऽऽत्मने मे मघवे त्वाऽग्नये त्वा मह्यं यस्तेऽश्वसनिरग्नये त्वा गायत्रच्छन्दसं व्वेशीनान्त्वोभिक्रन्देवान्दिवमापयें स्वाहाऽग्निरेकाक्षरेण मित्रो व्वसवस्त्रयोदशाक्षरेणैष ते ये देवा ऽआविर्म्मर्य्योऽऊर्द्ध्वामारोहाग्निः पृथुः सवित्रा प्रसवित्रा पृथिव्याः सधस्थाद्वसवस्त्वोभयोरदितिष्ट्वा व्वसवस्त्वाऽऽकूतिमग्निम् ॥ ३ ॥ विष्णोः क्रमशिच्छदस्यपान्त्वाऽयम्पुरः

पञ्च सजूर्ऋतुभिरनड्वान्वयोराड्यस्यायुर्मे पृथिवीच्छ-
न्दोऽग्निर्देवताऽऽशुस्त्रिवृत्पञ्चदशस्तवतीच्छच्छ-
न्दस्तन्तुना रायस्त्रिवृदसि राड्यसि विराडसि सम्रा-
डसि स्वराडस्यधिपत्न्यसि सहस्रस्य प्रमा सेनाभ्यः
आशवे शङ्कवे श्रम्भवाय पर्यायेमा मे नृपदे वेद्वाजश्च
सप्तविंशतिः समुद्रोऽसि सर्वं घर्मस्तेजोऽसि प्र-
थमा द्वितीयैरश्विभ्यान्त्वा होता यक्षत्समिधाग्नि-
न्द्वादशाश्विनौ सरस्वतीन्त्वारोऽग्निं स्विष्टकृत-
न्देवोऽअग्निःस्विष्टकृत्त्वामद्याग्नये स्वाहा हिङ्का-
राय यते कायाऽऽब्रह्मन्नध्यायान्तस्ताऽउभावश्वस्तू-
परोऽध्यायान्तः शादन्दद्भिर्न्वाग्नेयः कृष्णग्रीवस्त्विषी
ब्रह्मणे ब्राह्मणꣳ सप्तदश सुमित्रिया नः सुमित्रिया
नः सुमित्रिया नःऽएधोऽसीति द्वे शते चतुस्त्रिꣳ-
शदित्यन्त्यावसानानि ॥ ४ ॥ अथ अवसानानि ।
युष्माऽइन्द्रोऽग्ने ब्रह्म सँव्वपामि पुरा क्रूरस्य सवि
तुस्त्वा गन्धर्वस्त्वोपहूतो द्यौरेषा ते व्वसुभ्यस्त्वा व्वे-
दोऽस्यग्निज्ज्योतिः सꣳहिताऽस्युपहूताऽइहेदं देऽ
आकूत्यै प्रयुजऽऊर्गसि द्वे त्वमग्नेऽभित्यसदित्यास्त्वा
भद्रो मे तप्तायनी मे देवस्य त्वोभयोरह्वमत्य-
न्यारवृतेनात्तौ मनस्तऽइदमापऽएन्द्रः प्राणो माऽपो-
ऽग्नेर्व्वः सोम राजन्निन्द्रवायूइमेऽअयँव्वाय्या वाङ्मा

तस्मप्तक्कथाऽयँव्वेनो भ्रुवोऽसि कोऽसीन्द्राग्नी ऽआगतं पञ्च सजोषाऽइन्द्र चतस्रो व्विश्वस्मादित्य बृहस्पतिसुतस्यैजतु दशमास्यऽआतिष्ठ तिस्रऽउदुत्त्यँव्वि नऽइन्द्रेति तिस्रऽइह रतिः ॥ ५ ॥ ध्रुवसदन्त्वा ग्रहाऽऊर्ज्जोऽभृतयऽइन्द्रस्य वज्रो यवो यस्तेऽआ मा व्वाजस्याऽस्मे वः चतस्रोऽलवं प्रपर्वतस्य प्रजापते नाम्विभ्याम्पच्यस्व कुविदङ्ग पुरीष्योऽसृतर्ठ० सत्यमुखाङ्क्षणोरवदित्यै रास्नास्मूर्द्धा भवाग्निर्मूर्द्धा मधुश्चेमं मा द्वे शुक्रश्च व्विश्वकर्म्मोभयोर्न्नभश्चेषश्च षोडशी स्तोमोऽग्निर्ठ० होतारमग्ने त्वं तपश्च परमेष्ठी त्वोभयोर्न्नमोऽस्तु तिस्रऽआयुर्य्यज्ञेनऽऋचो नाम ॥ ६ ॥ स्वादिष्ठीन्त्वा कुविदङ्ग यदा पिपेषेदर्ठ० हवीरेतो मूत्रं दृष्ट्वा रूपे निषसाद नाभिर्म्मे चया देवा यदापोऽअश्विनौ छागस्य प्रजापतये त्वाऽग्निः पशुः प्राणाय स्वाहेमा नु कर्न्देऽअग्निश्चाथैतानष्टौ यङ्क्रन्दसीऽआ सुते कुतस्त्वमधि नो दस्रा युवाकवो दैव्यावध्वर्य्यूऽअस्येदिन्द्रो ब्रह्मणस्पते ऽअपेतः स्योना पृथिवि भूर्भुवोऽह्नानि शन्दते दर्ठ० ह यमाय त्वाऽनाधृष्टा पुरस्ताद्विश्वासां भुवां पते यस्ते स्तनो गायत्रीच्छन्दः समुद्राय त्वाऽभीमं पयसो रेतः स्वाहा प्राणेभ्यो लोमभ्यः स्वाहेति शतमेकचत्वारिर्ठ०

मादित्येतानि अवसानानि ॥ ७ ॥ अथ चतुरवसाना-
नि प्रत्युष्टꣳ रक्षोऽग्नीषोमयोरुज्जितꣳ सजूर्द्दे-
वेनेन्धानास्त्वा त्र्यम्बकँयजामहेऽꣳशुरꣳशुष्टे या
ते धामान्युश्मसि देवस्य त्वाऽग्नीषोमाभ्यां मरु-
त्वन्तं वृषभं माहिर्भूरग्ने व्रतस्योत्तिष्ठन्नोजसाऽदृश्रम-
स्य केतवो युवन्तं देवस्याऽहञ्ज्योतिष्मन्तं प्रैतु सुप-
र्णोऽसि विराड्ज्योतिरिमꣳ साहस्रं तिस्रो वा-
योः पूतः पुनन्तु मा पितरऽएधोऽसि सँवत्सरोऽस्य-
ग्निमहद्योभयोरिन्द्रस्यौजस्त्यऽऋजवे त्वा स्वाहा रुद्र-
द्राय हिरण्मयेन पात्रेणेति हाविꣳशादित्येतानि अ-
वसानानि ॥ ८ ॥ कृष्णोऽसि नमो वऽउशिगसि स-
मुद्रोऽसि मधुमतीर्नऽइषः प्राणाय परमेष्ठ्यभि-
धीतऽइन्द्रश्च प्रोक्ष्यमाणः सोमो विश्वे देवा हेऽअ-
ग्निरेकाक्षरेण पूषा पञ्चाक्षरेण मित्रो नवाक्षरेण
वृणऽऊर्म्मिरत्यैतस्त्यावेष्टा दन्दशूका दक्षिणामारो-
ह प्रतीचीमुदीचीमूर्द्ध्वा वयो मा छन्दोऽग्नेर्भा-
गोऽसि वसूनांयवानामेकया स्तुवत नवभिर्न्नवदश-
भिः ॥ ९ ॥ एवञ्छन्दोऽरश्मिना सत्याय प्रतिपदसि
नमो हिरण्यबाहवे बभ्लुशाय रोहिताय कृत्स्नायत-
योष्णीषिणे विसृजद्भ्यः सभाभ्यो गणेभ्यस्तक्षभ्यः
श्वभ्यः कपर्द्दिने ह्रस्वाय ज्येष्ठाय सोभ्याय वन्याय

व्विलिम्मने स्रुत्याय कूप्याय व्वात्त्याय पार्थ्याय सिक-त्याय व्रज्ज्याय शुष्क्याय प्रथममग्निमद्य स्तूपस्त्याऽस्त्र्येति षट्पञ्चाशदित्येतानि निरवसानानि ॥१०॥ अथ मध्यावसानानि ॥ द्वितीयठं० शर्म्मास्यग्ने व्वाज जिद्विभूरस्यादर्दे रावाऽसि द्वे मध्यऽइन्द्राय त्वा बृहद्वद्-ते पञ्चेति मध्यावसानानि ॥ ११ ॥ अथ पञ्चावसा-नानि ॥ प्रैतु व्वायुरनिलन्द्वे पञ्चावसाने ॥ १२ ॥ अ-थ षडवसानानि ॥ या तेऽअग्नेऽयःशया या ते घर्म्म द्वे षडवसाने ॥ १३ ॥ अथ नवावसानानि ॥ मखस्य शि-रोऽश्वस्य त्वा द्वे नवावसाने ॥ १४ ॥ अथ मर्य्या-दा ॥ शतानि चतुर्द्दश त्रिनवतिर्व्यवसानानि १४९३ भवन्ति ॥ द्वे शते त्रयस्त्रिठं०शदन्त्यावसानानि २३३ भवन्ति ॥ शतं पञ्चाशत्त्र्यवसानानि १५० भवन्ति ॥ त्रिठं०शच्चतुरवसानानि ३२ भवन्ति ॥ षट्पञ्चाश-न्निरवसानानि ५६ भवन्ति ॥ पञ्च मध्यावसानानि ५ भवन्ति ॥ द्वे पञ्चावसाने ५ द्वे षडवसाने २ द्वे नवा-वसाने भवतः ॥ सर्वाण्यवसानान्येकीकृत्यैकानविठं० शतिः शतानि पञ्चसप्ततिः सङ्ख्या कण्डिकायाश्चत्वा-रिठं०शदध्याये १९७५ ॥ इत्यनन्तदेवविरचिताऽव-साननिर्णयशिक्षा समाप्ता ॥ रसवेदाङ्केन्दुमिते १९४६

फाल्गुने शुक्लपक्षके ॥ पूर्णिमायां गुरोर्वारेऽवसा-
नान्यङ्कितानि वै ॥ १ ॥

---

# अथ कात्यायनमहर्षिप्रणीतस्वरभक्तिलक्षणपरिशिष्टशिक्षाऽऽरभ्यते ॥

---

अथातः सम्प्रवक्ष्यामि सर्वलक्षणलक्षिताम् ॥ शिक्षां समासतस्तत्र स्वरास्त्वष्टौ प्रकीर्त्तिताः ॥ १ ॥ तैरोविरामः क्षैप्रश्च तैरोव्यञ्जनकस्तथा ॥ भाव्योऽभिनिहितो जात्यः पादवृत्तश्च सप्तमः ॥ २ ॥ प्रश्लिष्टइति विज्ञेयाः प्रोच्यन्ते लक्षणान्यथ ॥ अवग्रहउदात्तश्चेत्स्वरितः स्यात्ततः परम् ॥ ३ ॥ अवग्रहात्पदं यत्तु तं विद्यात्प्रथमं स्वरम् ॥ लक्ष्यमस्य तु विज्ञेयं गोपताविति गो । पतौ ॥ ४ ॥ इकारोकारयोः स्थाने यवौ स्यातामुदात्तयोः ॥ अनुदात्ते पदे नित्यं स क्षिप्रइति कीर्त्तितः ॥ ५ ॥ त्र्यम्बकं द्वन्न इत्यादि लक्ष्यं ज्ञेयं विचक्षणैः ॥ स्वरितं छन्दसि पदं यत्किञ्चिदपि दृश्यते ॥ ६ ॥ उदात्तपूर्वं तत्सर्वन्तैरोव्यञ्जनउच्यते ॥ इडे रन्ते तथा हव्ये काम्ये इत्यादि दर्शनम् ॥ ७ ॥ अकारएकोदात्तेन रेफेणापहृतो भवेत् ॥ तच्चाभिनिहितं प्राहुः कुक्कुटोऽसि निदर्शनम् ॥ ८ ॥ विवृत्त्या दृश्यते यत्र स्वरं च स्वरिते पदे ॥ सस्वरः पादवृत्तः स्यात्पुत्त्रऽईधे निदर्शनम् ॥ ९ ॥ यत्रोदात्त इकारो हि

निपातैकारसंयुतः ॥ स प्रश्लिष्टइति ज्ञेयोऽभीममित्यादि दर्शनम् ॥ १० ॥ सादौ पदे परे पूर्वं ककारान्ते पदे स्थिते ॥ कसवर्णं तु विज्ञेयं भिषक्क्षोसेन दर्शनम् ॥ ११ ॥ चकारान्ते पदे तान्ते पूर्वे च समवस्थिते ॥ प्रत्यारम्भो न तत्र स्याद्यच्चाहमिति दर्शनम् ॥ १२ ॥ सादौ पदे परे पूर्वं ङकारान्ते पदे सति ॥ कसवर्णद्वयं तत्र प्राङ् क्सोमइति दर्शनम् ॥ १३ ॥ सादौ पदे परे नान्ते पूर्वे च समवस्थिते ॥ तसवर्णं विजानीयात्त्रीन्त्ससुद्रान्निदर्शनम् ॥ १४ ॥ मादौ पदे परे मान्ते पूर्वसुच्चारिते सति ॥ मसवर्णन्तु तत्र स्यादिमस्मइति दर्शनम् ॥ १५ ॥ पदमध्ये पदाद्यन्तेऽक्षरहरेफैश्च संयुते ॥ यकारे जं विजानीयाद्युञ्जानेत्यादिकं यथा ॥ १६ ॥ टवर्गमन्तरा षस्य खोच्चारश्छन्दसीरितः ॥ प्रत्युदाहरणं इष्टो दिपीषि त्वा निदर्शनम् ॥ १७ ॥ ऊष्मोर्ध्वरेफस्योच्चारः सैकारो ह्ल्युता न चेत् ॥ पितॄणामिह पित्रेणामित्यादि च निदर्शनम् ॥ १८ ॥ ळं॰कारः स्यादनुस्वारस्थाने शलि च रे परे ॥ ह्रस्वाद्दीर्घो भवेद्दीर्घाद्ध्रस्वो गुरुरयो मतः ॥ १९ ॥ सँय्योगे परतो हर्ळं॰सइत्यादि निदर्शनम् ॥ ताꣳ सवितुरित्यादि दꣳष्ट्रेत्यादिकं तथा ॥ २० ॥ ह्रस्वदीर्घगुरूच्चारः कर्त्तव्योऽत्र यथा क्रमम् ॥ शल् रेफयोरभावेन सिळं॰ही

प्रत्युदाहृतिः ॥ २१ ॥ शरेः परे वा नु दिती द्विर्भवे-
द्रेफभागिनाम् ॥ विसर्गाच्च परे यां ऋकारहीनां नि-
दर्शनम् ॥ २२ ॥ अस्कन्नमद्य कस्याश्चित्कृष्णोऽस्या इ-
ति च क्रमात् ॥ सूर्य्यस्त्वा द्यौष्प्रिता चाथ दधान्त्व-
स्मानिति क्रमात् ॥ २३ ॥ बृहन्तः प्प्रस्तरेष्ठेति पु-
नः कक्रत्वे निदर्शनम् ॥ पाणिनीयस्य सूत्राभ्यां द्वित्वं
सर्वत्र कीर्त्तितम् ॥ २४ ॥ यवयोः परयोः सस्य द्वित्वं
न स्यात्तु छन्दसि ॥ व्यसवस्त्वा धूपयन्तु तस्य योनिं
यथायथम् ॥ २५ ॥ ह्ल्युतऋकारस्तु रेकारश्छन्द-
सि स्मृतः ॥ पितृणामिति पित्रेणामित्यादि च निदर्श-
नम् ॥ २६ ॥ ह्रस्वं दीर्घं भवेत्किञ्चित्संहिताविषये
स्वके ॥ हलिविसर्गयुते वर्णो ह्ल्युतायुतके च न ॥
२७ ॥ सपत्नान्यद्गमश्चन्येति किञ्चिद्दीर्घो भवेदिह ॥
भागरूप्रजावतीत्यादौ ह्रस्वता न तु दीर्घता ॥ २८ ॥
ह्ल्युताकारसँय्योगादिति ज्ञेयं विचक्षणैः ॥ इति का-
त्यायनपरिशिष्टे वर्णोच्चारप्रकारः ॥ सन्ध्यश्चतुर्धा विज्ञे-
या लोपागमविकारतः ॥ २९ ॥ प्रकृत्या च तथा
तत्र प्रथमं हि निदर्शनम् ॥ विकारतो यथा चेदं प्रे-
षितेत्यादिकं भवेत् ॥ ३० ॥ देवो वः सवितेत्यादौ
प्रकृत्यादिप्रदर्शनम् ॥ उभौ स्वरौ तयोरन्तः सन्धिर्य्यत्र
न दृश्यते ॥ ३१ ॥ सा विवृत्तिर्बुधैर्ज्ञेया स एवेति

च पश्यति ॥ एषा चतुर्द्धा विज्ञेया प्रथमा तु पिपीलिका ॥ ३२ ॥ परा पाकवती चैव तथा वत्सानुसारिणी । वत्सानुत्सृजिता चैव चतस्रस्ता विष्टत्तयः ॥ ३३ ॥ पिपीलिकाऽऽद्यन्तदीर्घा नाभ्याऽश्वासीन्निदर्शनम् ॥ द्वितीया तूभया ह्रस्वा त्विनऽइन्द्रेति दर्शनम् ॥ ३४ ॥ तृतीया चोदिता दीर्घा ताऽअस्येति निदर्शनम् ॥ अन्ते चतुर्थी दीर्घा स्यात्तानऽश्वावीढमश्विना ॥ ३५ ॥ स्वरभक्तिः पञ्चधा स्यात्तत्राद्या करिणी स्मृता ॥ रकारेण हकारेण संय्योगो यत्र दृश्यते ॥ ३६ ॥ करिणी सा तु विज्ञेया बर्हिरसीति दर्शनम् ॥ लकारेण हकारेण संय्योगो यत्र दृश्यते ॥ ३७ ॥ कुर्विणी सा हि विज्ञेया उपवल्हेति पश्यति ॥ रकारस्य शकारेण संय्योगो यत्र दृश्यते ॥ ३८ ॥ हरिणी सा तु विज्ञेयाऽर्शसऽइत्यादि दर्शनम् ॥ लकारेण शकारेण संय्योगो यत्र जायते ॥ ३९ ॥ तां हरिणीं विजानीयाच्छतवल्शेति दर्शनम् ॥ रेफस्याथ षकारेण संय्योगो यत्र दृश्यते ॥ ४० ॥ हंसपादेति विज्ञेया वर्षो वर्षीयसीति च ॥ एतल्लक्षणमाख्यातं स्वरभक्तेर्विचक्षणैः ॥ ४१ ॥ ज्ञात्वैतन्मनुजो याति ब्रह्मलोकं सनातनम् ॥ इति कात्यायनेनैव परिशिष्टं कृतं मुदा ॥ ४२ ॥ इति कात्यायनोक्ता स्वरभक्तिलक्षणपरिशिष्टशिक्षा समाप्ता ॥

# अथ क्रमसन्धानशिक्षाऽऽरभ्यते ॥

---

यथा समाम्नातङ्क्रमावसानर्ढं० सङ्क्रमेषु ॥ क्रमशास्त्रानुसारेण सन्धानं प्रोच्यतेऽधुना ॥ १ ॥ विश्वधाः परमेण । १ । ह्वार्षीच्छतधारम् । २ । सहस्रधारन्देवः । ३ । अधुक्षः सा । ४ । विश्वधायाऽइन्द्रस्य । ५ । राध्यतामिन्द्र् । ६ । एमि कः । ७ । तस्मै कर्म्मणे । ८ । व्वान्प्रत्युष्टम् । ९ । अरातयऽउरु । १० । एमि धूः । ११ । धूर्व्वमो देवानाम् । १२ । देवह्रुतममह्रुतम् । १३ । हविर्द्धानँ व्विष्णुः । १४ । हस्ताभ्यांमग्नये । १५ । गृह्ह्लानि भूताय । १६ । रश्मिभिर्द्दैवीः । १७ । देवयुवँय्युष्माः । १८ । स्वाग्नये । १९ । अग्नीषोमाभ्यां दैव्याय । २० । व्वेत्त्वद्द्रिः । २१ । व्वेत्त्वग्नेः । २२ । ममीव्वहविष्कृत् । २३ । इहि कुक्कुटः । २४ । व्वह द्ध्रुवम् । २५ । वधायाग्ने । २६ । अन्तरिक्षन्त्वत्तर्मम् । २७ । दिवँव्विश्वाभ्यः । २८ । व्वेत्तु धान्यम् । २९ । व्यानाय दीर्घाम् । ३० । रसेन देवतीः । ३१ । पृच्च्यन्ताञ्जनयत्यै । ३२ । बधः पृथिवि । ३३ मौगप । ३४ । बध्यासमररो । ३५ । स्कन्नगायत्रेण । ३६ । जाग-

तेन सुम्ना । ३७ । माऽम्यं निश्चिता । ३८ । माऽम्यं-दित्यै । ३९ । पश्चाम्स्यग्ने: । ४० । यजुषेयजुषे सवि-तु: । ४१ । त्वा तेज: । ४२ । इति द्विचत्वारिंशत्प्र-थमाध्याये ॥ पतये गन्धर्व्व: । १ । ईडितऽइन्द्रस्य ।२। दक्षिणो मित्रावरुणौ । ३ । अभिशस्त्यै सवितु: । ४ । ध्रुवा ध्रुवा । ५ । माञ्जिम नम: । ६ । सचन्तामस्मा-कम् । ७ । अश्नाम्येतम् । ८ । ब्रह्मणे तेन । ९ । ऊहाम्यग्नीषोमौ । १० । ऊहामीन्द्राग्न्यो: । ११ । इन्द्राग्न्योरिन्द्राग्नी । १२ । इन्द्राग्नी वसुभ्य: । १३ । अवतांऽव्यन्तु । १४ । मरुद्भिरिन्द्र: । १५ । तस्मै पोषाय । १६ । वर्च्चोग्ने । १७ । हिमाऽअचारिष-म् । १८ । वेदिषदो ये । १९ । इत्येकोनविंशति-र्द्वितीयाध्याये ॥ २ ॥ उषसा सूर्य्य: । १ । गृहप-ते पुरीष्य: । २ । पतिवेदनमित: । ३ । इति त्री-णि क्रमासन्धानानि तृतीयाध्याये ॥ ३ ॥ चतुर्थे क्र-मसन्धानाभाव: ॥ ४ ॥ पुरूरवा मन्थामि । १ । र-ज:शया हरिशया । २ । देववीतये सिंहि । ३ । ध्रुवो वैष्णवम् । ४ । ध्रुवऽऐन्द्रम् । ५ । हव्यवाहन: श्वात्त्र: । ६ । अभूद्यथायथम् । ७ । इति सप्त पञ्च-माध्याये ॥ ५ ॥ षष्टाध्याये क्रमसन्धानाभाव: ॥ ६ ॥ मादयस्वोदानाय । १ । भून्महेन्द्राय । २ । इति द्वे

क्रमसन्धाने सप्तमाध्याये ॥ ७ ॥ अष्टमाध्याये क्रमसन्धानाभावः ॥ ८ ॥ इन्द्रस्य सत्यप्रसवः । १ । इन्द्रँ व्वाजजितः । २ । इति द्वे क्रमसन्धाने नवमाध्याये ॥ ९ ॥ दशमाध्याये क्रमसन्धानाभावः ॥ १० ॥ जागतेन छन्दसे । १ । हिरण्ययीमानुष्टुभेन । २ । इति द्वे क्रमसन्धाने एकादशाध्याये ॥ ११ ॥ परिचिल्लोकम् । १ । इत्येकं क्रमसन्धानं द्वादशाध्याये ॥ १२ ॥ दिशामि साहस्रम् । १ । गवयमूर्स्रायुम् । २ । उष्ट्रमजः । ३ । शरभन्त्वम् । ४ । इति चत्वारि क्रमसन्धानानि त्रयोदशाध्याये ॥ १३ ॥ अन्तरिक्षँव्वायुः । १ । व्वायूराज्ञी । २ । बृहती नभः । ३ । इति त्रीणि क्रमसन्धानानि चतुर्दशाध्याये ॥ १४ ॥ अग्नेर्देवः । १ । रथेचित्रो मेनका । २ । असमरथः प्रम्लोचन्ती । ३ । अरिष्टनेमिर्व्विश्वाची । ४ । सुषेणऽउर्व्वशी । ५ । शैशिरौ परमेष्ठी । ६ । दिवः सूर्य्यः । ७ । दिवं ध्रुवे । ८ । इत्यष्टौ पञ्चदशाध्याये ॥ १५ ॥ षोडशसप्तदशाधयायौ क्रमसन्धानरहितौ स्तः ॥ १६ ॥ १७ ॥ स्वस्तोमः । १ । रथन्तरँव्वेट् । २ । इति द्वे क्रमसन्धानेऽष्टादशाध्याये । एकोनविंशतिमाध्याये क्रमसन्धानाभावः ॥ १९ ॥ व्वायुश्चाग्रत् । १ । स्वर्न सूर्य्यः । २ । रुद्रद्देऽर्य्ये । ३ । आपोऽयक्षि । ४ ।

इति चत्वारि क्रमसन्धानानि विंशतिमाध्याये ॥ २० ॥ एकविंशतिमाध्याये क्रमसन्धानाभावः ॥ २१ ॥ स्वाहाकृतः स्वगा । १ । प्राणाय यत्ते । २ । इति द्वे द्वाविंशाध्याये ॥ २२ ॥ चतुष्पदश्चन्द्रमाः । १ । चन्द्रमा रात्रौ । २ । वायुः सूर्यः । इति त्रीणि क्रमसन्धानानि त्रयोविंशाध्याये ॥ २३ ॥ चतुर्विंशतिपञ्चविंशतिषड्विंशतिसप्तविंशतिमाध्यायेषु क्रमसन्धानाभावः ॥ २४ । २५ । २६ । २७ ॥ शुचिसुपिाद्दा । १ । देवौ त्रिष्टुभा । २ । इति द्वे क्रमसन्धानेऽष्टाविंशाध्याये ॥ २८ ॥ एकोनत्रिंशत्त्रिंशदेकत्रिंशद्द्वात्रिंशत्त्रयस्त्रिंशच्चतुस्त्रिंशत्पञ्चत्रिंशदध्यायेषु क्रमसन्धानाभावः ॥ २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ ॥ ऊतिभिः कया । १ । ईच्चऽईचामहे ॥ २ ॥ इति द्वे क्रमसन्धाने षड्त्रिंशदध्याये ॥ ३६ ॥ पाहि मधु । १ । स्वाहा रात्रिः । २ । इति द्वे सप्तत्रिंशदध्याये ॥ ३७ ॥ सरस्वत्यसौ । १ । इत्येकमष्टत्रिंशाध्याये ॥ ३८ ॥ एकोनचत्वारिंशाध्याये क्रमसन्धानाभावः ॥ ३९ ॥ अविद्यांविद्यायाम् । १ । ओं ३ क्रतो । स्मर क्लिबे । क्लिबे कृतम् ॥ ४० ॥ इति चत्वारि चत्वारिंशाध्याये ॥ इति पञ्चदशाधिकैकशतं क्रमसन्धानानि । ११५ । एभ्यो-

ऽन्यत्र संहितानुसारेण निर्णयः ॥ इति क्रमसन्धान-शिक्षा समाप्ता ॥

---

# अथ गलद्दक्शिक्षाऽऽरभ्यते ॥

इषे त्वाऽश्वस्तूपरः समिद्धोऽअञ्जन्त्सहस्रशीर्षा पुरुषस्तदेव स्वाहा प्राणेभ्यस्त्वेत्येतेष्वध्यायेषु न गलिता क्टचः। द्वितीयेऽध्यायेऽग्ने व्रतपतऽइति पश्चात्प्रविष्टाऽतस्त्रयस्त्रिंशत्। तृतीयेऽध्यायेऽयमग्निः पुरीष्य इति प्रविष्टाऽतो द्विषष्टिः। पञ्चमेऽध्यायेऽग्ने व्रतपाश्च प्रविष्टोरु व्विष्णो गतोऽतएकचत्त्वारिंशत्। षष्ठेऽध्याये प्रथमा ऋग्गलिता, रेवतीरमद्ध्वमित्यत्र देवस्य त्वा एवं पञ्चत्रिंशत्। वाचस्पतय इत्यत्र स्वाङ्कृतोऽसि आत्मने मे सम्पृक्ते। अयन्नोऽग्नेनय लुप्त्वाच्चतुश्चत्वारिंशत्। आदित्येभ्यस्त्वेत्यत्र कदा चन सँव्वर्चसा युग्देवा गातुविदऽउदुत्यमवभृथनिचुम्पुणोशिक्वं गलिते सप्त षट्पञ्चाशत्। देव सवितरित्यत्र देवस्याहमेकोनचत्वारिंशत्। अपो देवाऽइत्यत्र सोमस्य त्विषिरिमं देवा लुप्ता द्वात्रिंशत्। युञ्जान इत्यत्र युञ्जते मनो व्विश्वो देवस्य देव सवितः पृथिव्याः सधस्थाद्दसवस्त्वाच्छृदन्तु मिलिताष्टाशीतिः। दृशानऽइत्यत्र हंसः शुचिषदक्रन्ददग्निर्द्दृशानो रुक्मः समिधाग्निं पुनरुर्ज्जा सह-

रव्याऽयन्ते भवतन्नऽइति मिलिता अष्टोत्तरशतम् । अयि गृह्णाम्यग्निर्मूर्द्धा प्रविष्टाऽअपाम्पृष्ठं मही द्यौर्विष्णोः कर्म्माणि चित्रन्देवानां त्रिपञ्चाशत् । ध्रुवक्षितिः शुक्रश्च विश्वकर्म्मा त्वा द्वे नभश्चेषश्च राड्यसि मिलितं सहश्च षड्विंशं शत् । अग्ने जातानग्निर्मूर्द्धा त्वामग्ने पुष्करादधि भुवो यज्ञस्यायमिहाग्ने त्वमयन्ते लोकम्पृण ताऽअस्येन्द्रं विश्वा न चैता लुप्यन्ति परमेष्ठी त्वा द्वौ मिलित्वा चतुः पञ्चाशत् । नमोऽस्तु नीलग्रीवाय नमोऽस्तु रुद्रेभ्यो द्वौ मिलित्वाऽतत्त्रिषष्टिः । अश्मन्नूर्ज्जं हिमस्य त्वा वाचस्पतिं विश्वकर्म्मन्हविषोदु त्वेंद्रँविश्वा नक्तोषासाऽग्ने तं सप्तनवतिः । वाजस्य हेवस्य त्वा वाजस्य नु यास्ते यावऽउद्बुध्यस्व येन वहसि विनस्त्वँव्यविष्ठैकोनसप्ततिः । स्वाद्वीन्त्वा वायोः पूतः कुविदङ्ग त्रिणवतिः । दत्तस्य योनिः समुद्रे तऽउपयामगृहीतोऽसि पुनर्मिव निषसाद यदि जाग्रद्यदापो यदि दिवा यनेन्द्रस्य युवं सुराममिति नवतिः । इममे तन्त्वा शन्नो वाजेवाजेऽवत होता यक्षदिन्द्रस्यपमस्येति सरस्वतीस्वपस्येति प्रविष्टाः सप्तपञ्चाशत् । तेजोऽसि तत्सवितुर्विश्वानि देवस्य पृथिव्यै स्वाहा मघवे स्वाहा वाजाय स्वाहाऽसवे स्वाहेति प्रविष्टा एकोनविंशं शतः । हिरण्य-

गर्भः कुविदङ्ग कः स्विदासीत्स्वित्सूर्य्यऽएकाकी का स्विद्द्यौरा-
शसोदुप्रयामगृहीतोऽसि सप्तपञ्चाशत् । शादन्दद्भि-
र्हिरण्यगर्भो यः प्राणतोऽग्ने त्वन्नतुश्चत्वारिंशं-
शत् । अग्निश्च वैश्वानरो नः पञ्चविंशं शतिः । स-
भास्त्वोद्दयञ्चतुश्चत्वारिंशं शत् । होता यक्षद्देवा
दैव्या शुचिमुषिाहानन्तरं सवोऽनः पञ्चत्रिंशं शत् ।
देव सवितस्त्वत्सवितुर्विंशं शत् । अश्वा जरासो युक्त्वा
ह्ययमिह मूर्द्धानन्दिवऽउदुत्यं विश्वेऽअद्येन्द्र वायू य-
ज्ञो देवानां गावऽउप दैव्यावध्वर्य्यूऽअदब्धेभिः सप्ता-
शीतिः । यज्ञाग्रतऽआकृष्णेन सप्तपञ्चाशत् । अपे-
तोऽश्वत्थे वः सुमित्रिया नऽउद्वयमग्नऽआयूंषि
ह्यष्टादश । त्वचं त्वा चक्षुर्भुवः कया नः कस्त्वा स्योना
पृथिवि आपो हिष्ठेतितिस्रो नमस्ते हरसे सुमित्रिया
नोऽभीषुणो हते दृंह त्रयोदश । देवस्य त्वा देवी
द्यावा पृथिवीऽन्द्रस्यौजोऽश्वस्य त्वा ऋजवे त्वियत्य-
ग्रे प्रविष्टास्त्रयो हृदे त्वा युञ्जते मनः प्रैतु मखस्य
शिरस्त्रयोदश । देवस्य त्वा सुमित्रिया नऽउद्वयमे-
धोऽसीडऽएह्यदित्यै रास्नासीन्द्राय त्वा षड्द्वाविंशं
शत् । ईशा वास्यमन्धन्तमोऽन्यदेव सम्भूतिं च मिलि-
तास्त्रयोऽग्नेनय त्रयोदश । एवं चतुष्षष्टिऋचो विलु-
प्ता एकादशोत्तरशतानि ऋचोऽधिकाश्च ॥ एवं कृते

ष्टतिशतान्यपि सङ्ख्यकाश्च प्रोक्ताः समार्य्यैः खलु कण्डिकाश्च ॥ १ ॥ इति लुप्तवर्णसङ्ख्यात्मिका शिक्षा समाप्ता ॥

---

# अथ मनःस्वारशिक्षाऽऽरभ्यते ॥

मनःस्वारं प्रवक्ष्यामि ब्रह्मणा निर्मितं पुरा ॥ भगवान्याज्ञवल्क्येन भाषितँल्लोकहेतवे ॥ १ ॥ अथ त्रिपदा द्विरवसानमध्येऽनुदात्तानि । अथाधिमध्येऽनुदात्तानि भवन्ति । कस्त्वा राजन्तमध्वराणां स नः पितेव मा नः परि ते प्रागपाक् प्राणो मरुतो यस्य योगे योगे तवस्तरं तस्माऽअरन्द्र न्नः परस्या ऽअधि पुनरूर्ज्जा समिधमग्ने यत्ते शुक्रं तुभ्यन्ता मयि गृह्णामि मधु व्वाता मधुमान्नोऽग्ने युद्ध त्वँय्यविष्ठाग्ने पावक स नः पावक व्वार्त्रहत्याय शवसे पवमानः सस्तानऽआवोढं चित्रभानो धियेषितः । आ नो मित्त्रावरुणाजीजनो ह्यग्ने पत्नीः स यच्चत्तव व्वायो व्विश्श्वानि देव हरयो धूमकेतवो व्विश्श्वेभिः सोम्म्यँय्येना पावक यद्दद्य कच्च व्वरुणः प्रावितोषस्तद्यन्मे च्छिद्द्रमिन्द्रो विश्श्वस्य शन्नो देवीर्हते दृठँ०ह मा स्वाहा मरुद्भिः पञ्चचत्त्वारिंठँ० शत् ॥ १ ॥ अथ त्रिपदा द्विरनुदात्ता । प्रघासिनो हवामहे व्वयठँ० सोमान्त्यर्य्यच्छ मही द्यौः सह रय्याऽग्निः प्रियेषु समुद्द्रस्य त्वा इयं शुक्रज्ज्योतिश्चेहङ्च व्वैश्श्वानरो नः पावका नः सुनावमारुहेयन्दे-

वस्य चेततो रातिठं० सत्पतिं देवस्य सवितुरुपह्वरे गिरीणामुच्चा ते द्रविणो दाः पिपीषति विभक्तारठं० क्रत्वामहऽउभा पिबतठं० हृदे त्वा द्राविठं० श्रुतिः । २ । अथ त्रिपदाद्यन्ता मध्येऽनुदात्तानि । अग्ने व्रतपते सुसमिद्धाय त्वयं मनो नु पुनर्न्नऽउदुत्यं तमुत्वा पात्थ्यो वृषाऽऽपो हि ष्ठाऽयमग्नेऽभ्यावर्त्तिन्नग्ने वाजस्य येनासमत्स्वग्ने तमद्य नमस्ते रुद्र सम्प्रा स्वजास्यग्नऽआयूᳬंष्यध्वर्य्योऽअद्रिभिर्गोभिदृषुणा सत्या तूतुजानः स हव्यवाट् स नऽइन्द्राय मध्वा यज्ञमच्छाय तेऽअस्य वायो ये ते व्वनस्पतेऽव कस्त्वा सत्यस्मदसस्पर्तिं गावऽउपेन्द्रेह्युपास्माऽइन्द्राण्याऽउष्णोषोऽश्विना घर्म्ममपातामश्विनैकोनचत्त्वारिठं० शत् । ३ । अथ त्रिपदाऽऽद्यानुदात्तानि । स्वयम्भूरस्यग्नये कव्यवाहनाय समिधाग्निं चिठं०शद्धामास्स प्रत्नान्न हि तेषांयुद्वा हि देव त्वं। राजन्भद्राऽउतैभिर्न्नो व्वीतठं० हविरुभाभ्यां देवानां फेनेन त्वत्स्य योनिद्वीनावन्तं करम्भिणमश्विनक्तस्य ते मह्योऽअर्णऽइमस्मै सुष्टुतिठं० सुमतीवृधो युञ्जन्त्यस्यैना व्विश्वान्यभि यज्ञं केतुङ्कृण्वन्नग्निर्वृत्राणि वृहन्निदिध्मो मित्रठं० ऊर्ध्वऽ उग्रा विवनिना सविता ते शरीरे द्वे व्वायुः पुना तु स्योना पृथिव्येकत्रिठं० शत् । ४ । अथ त्रि-

पदा मध्योदात्तान्यन्तस्वरत्यग्निमर्म्मूर्द्धा मंहि त्रीणा-
मिदँ्विष्णुर्विष्णोः कर्म्माणि मित्रस्य चर्षणीधृतो वि
मुच्यद्ध्वमषाढाऽसि सऽइधानो भद्रद्रो नऽइष्टो ऽग्न-
ग्निः पुनाति ते यत्ते पवित्रं चोदयित्री सूनृतानां
तनूनपादसुरो द्वारो देवीरग्ने स्वाहा वायुरग्रे-
गाऽअभीषुणो यदद्य सूरऽउदिते विश्वेभिरुप नः पूष-
न्तव धर्त्ता दिवश्चतुर्विंशतिः । ५ । अथ त्रिपदा
अन्त्योदात्तानि वीतिहोत्रन्त्वोपप्रयन्तोऽअध्वरं सो-
मानं स्वरणं यो देवाना नऽएतु युञ्जाथां रासभ-
न्तमुत्त्वा सोरायुञ्जन्त्याप्यायस्व समेतु ते मदिन्त-
मं मधुनक्तमयमग्निः सहस्रिणऽऋतजिद्धऽऋतस्य स्व-
तवाँश्च दिवो मूर्द्धा हिरण्यपाणिमूतयेऽग्निन्दूतँ्यु-
ञ्जन्ति ब्रध्नं कस्त्वाऽऽच्छयति स्वादिष्ठया तिस्रो
देवीर्बर्हिरिदँ्यं नियुत्त्वान्वा कया नश्चित्रस्तरणिर्विश्वद-
र्शतऽइन्द्रवायू बृहस्पतिमिमे सुतास्तीव्रप्रासः प्रजा-
पतौ त्वऽऋतचँ्वाचमेकत्रिंशत् । ६ । अथ त्रिपदामध्ये
अन्तोदात्तानि भेषजमस्यृद्धोऽअस्य काव्ययो राजानेषु
देवी द्यावापृथिवी देव्यो वम्म्यऽइयत्त्यग्रे पट् । ७ ।
अथ त्रिपदा कम्पः । प्रत्युष्टं॰ रक्षो द्विकं रेवतीर-
मध्वं निषसादाग्निस्तिग्मेन पयः पृथिव्यां नारिरस्माद-
देऽदित्यै रास्नासि । ८ । अथ त्रिपदा जात्यः । क-

स्त्वा विमुञ्चति तद्विष्णोर्य्युक्तेन मनसेन्द्रस्य सूरास्व-
ग्नेऽवाद्यग्ने प्रेद्धोऽग्ने कोऽसि बाहू मे स्वयँव्वाजि-
न्दैव्या होताराऽऊर्द्ध्वमध्वरमस्मात्त्वमेकादश । ६ । अ-
थ त्रिपदामध्ये तकारान्ता आपवस्व परिवाजपतिराते
वत्सो मनो देवहूर्य्यज्ञो मध्यान्ते पवित्रेण पुनीहि य-
ज्ञा नः षट् । १० । अथ त्रिपदान्ते तकारान्ताः ।
आधत्तेडऽएहि तत्सवितुरभ्यावर्त्तस्वाग्निꣳ स्तोमेन र-
क्षोहा व्विश्वचर्षणिः सप्त । ११ । अथ त्रिपदाम-
ध्ये नकारान्ताः । अग्निर्ज्योतिषोचसकथ्याऽअव क-
या त्वं त्रीणि । १२ । अथ त्रिपदान्ते नकारान्ताः ।
ऊर्ज्जँव्वहन्ति त्रीणि पदा द्वयम् । १३ । अथत्रिपदा-
न्तरा आद्युदात्ता । आऽय,न्ते हि,मा सु, न यदाऽऽह्वा-
नि पञ्च । १४ । अथ चतुष्पदा द्विरवसाना मध्येऽनुदा-
त्ताऽन्यथादिमध्योदात्तानि भवन्ति । सा व्विश्वायुः श-
र्म्मासि मनो जूतिर्य्यम्परिधिं सम्बर्हिरत्र पितरऽआऽग-
न्म गृहा माऽग्ने त्वꣳ सु, अनु त्वा माता व्वस्यसि
समख्ये परि मा प्रति पन्थां सूर्य्यस्य चक्षुर्भवतन्नऽआप-
तये त्वा सन्ते कार्षिरसि यत्ते सोम त्वमङ्गाऽऽवायो
मनो न देवा गातुविदो देवी रापऽएष वो गर्भो, यस्यै-
ते व्वातो वा बृहस्पते व्वाजँव्वाजस्य न्वग्नेऽअच्छ सू-
र्य्यस्त्वचसस्त्यऽइन्द्रस्य व्वज्रऽइयदस्यन्न्वग्निस्त्वमग्ने

द्युभिः सन्ते व्वायुर्य्यदग्ने यदत्ति ये जनेषु यो॒ऽअस्म-
व्ध्यमन्नपतेऽन्नस्य व्विश्वा रूपाण्यग्नेऽअङ्गिरऽउदुत्त
मँय्यस्तेऽअद्य त्वामग्ने यजमाना ऽउदुत्त्वा गर्भोऽअ-
सि पुनरासद्य सँव्वाँय्यस्यास्ते कामङ्कामदुघे यत्नौष-
धीरुच्छुष्मा यस्यौषधीर्य्याः फलिनीरोषधयः सन्वाङ्ग-
न्व्वो मा मेषमूर्ज्जन्नमोऽस्तु सर्प्पेभ्यो याऽइषवो ये
वा यस्ते यावस्तोन्त्सरुद्रानजस्त्रमिन्दुँय्योऽअग्निर-
ग्नेस्त्वामग्ने अऽङ्गिरसः सखायः सर्ठ० सोऽअग्निर्य्ये
नऽऋषयो नमोऽस्तु नीलग्रीवाय या ते हेति म्मी न-
स्तोकेऽसङ्ख्याता सहस्राणि नीलग्रीवाः शितिकण्ठा
दिवँय्ये वृक्षेषु ये भूतानाँय्ये पथाँय्ये तीर्त्थान्न्यस्मन्नू-
र्ज्जँयऽइमा ऽअवसृष्टापरोह्यर्षय यत्र बाणा व्वाजो नस्त-
यर्ठ० रुचन्नस्तत्त्वा यास्येतावद्रूपँय्यजुर्भिराप्यन्ते ये
समाना इ सृतोऽउदीरतामङ्गिरसो नो ये नः पूर्व्वे
त्वर्ठ० सोमाच्च्या जानु सरस्वती मनसाऽङ्गान्न्याकृत्म-
ब्ब्हिरो मे नराशर्ठ० सः प्रति आनऽइन्द्रो हरिभि-
रिन्द्रः सुत्रामा स्ववान्तस्य व्वयमामन्द्रैर्गोभिर्न्न यऽइन्द्रे
ता नासत्त्या त्वष्टा तुरीपो व्वनस्पतिमभि यः प्राण
तो द्विपदा या दैव्व्याऽअद्ध्वर्य्यवः किꣳस्विद्वन्ना सू-
र्य्यसमँय्यन्निर्णिजोपप्रागात्सुमद्यदश्वस्य यत्ते गात्रा-
द्दये व्वाजिनं चतुस्त्रिर्ठ० शाद्वाजिनो यद्वाह्निष्ठँव्वा-

यो शुक्रस्तनूनपातमूतिभिर्वर्हिषीन्द्रमिन्द्रं स्वाहा प्रचेतसा देवानां स्वाहाकृतिरग्निस्त्वष्टा वीरमसि यम: समिद्धोऽअद्य तनूनपात्पथो धन्वना गाऽआज-ङ्गन्तीन्द्रस्य वज्रो मरुता मनीकमाक्रन्दय तस्मा-द्धयज्ञात्तस्मादश्वा यो देवेभ्यस्तदेव स नो बन्धु-र्यस्मिन्धान्हे विरूपेऽअग्ने शर्द्ध प्रवो महे श्रायन्तऽइव सूर्य्यँ ये त्वा जनिष्टाऽउग्रोऽनुतेऽदधेभि: प्रवीरया ब्रह्माणि मेऽनुत्तमा तऽऋधगित्था येन कर्म्माणि त्वयं त्वमग्ने प्रथमऽइडायास्त्वा हिरण्यपाणि: सविता ये ते भगप्रणेतरानां सख्या यदा बध्नन्नुत्तिष्ठापाघठं शन्नो वातो द्यौ: शान्तिर्यतो यतो, गर्भो देवानां समग्निरग्निनाऽह्न: केतुनेडऽएहि स्वाहा पूष्णे चतु: स्विान्नाभिस्तपसे स्वाहा शतमेकाशीत्येकन्यूनम् ।

१५ । अथ चतुष्पदा ह्यनुदात्तानि गायत्रेण त्वा स-मिद्भभावाम्पूर्णा दर्वि देहि मे महीनाम्पय: शुक्र-न्त्वाऽग्नेर्जनित्रमुरु विष्णो द्धयठं हविष्मतीरिमा हृदे त्वा वाचस्पतये सुवीरो वीरान्त्सुप्रजा: प्र-जा ब्राह्मणमद्य वामसद्यापाएरसमेषा वऽउत क्षेमन्देवा: स्योनाऽसि युवठं सुरामभागत्य वाजी प्रसद्य भस्मना सजूरब्द: साकँय्यक्ष्म द्रप्सश्चस्कन्द कृणुष्व पाजऽइषे राये श्राणम्मेऽएना वऽउभे सुश्चन्द्रा-

पो ह्विष्ट्वाऽवतस्य धनुश्शर्तवस्त्योऽपामिदं गोत्रभिदं गोविदमस्माकमिन्द्रोऽमीषां चित्तᳬ सप्त ते सप्तुद्र-द्रा दूर्म्मिरेताऽअर्षन्ति सम्यक्स्रवन्ति सह दानुरूपुरु-हूत स्रगो न पृष्ठो दिव्यशृङ्गाम तं देवा यज्ञन्दीचायै स्रूपमातिथ्यस्रूपं ग्रैवेभिः प्रैषानर्द्धऽऋचैरुक्थानाम-श्विभ्यां प्रातः सवनं पुनन्तु मोशन्तस्त्वा हृद्वा परि-स्रुतः पृष्ठीर्म्मे द्रुपदादिव मुमुचानोऽᳬशुना ते प्राणाय मे तिस्रस्त्रेधऽऋतुथेन्द्रो महीमृषु सुबर्हिर-ग्निरूपे युह्वी तिस्रऽइडा शनिता नो देवीऽऊर्ज्जा-हुती देवा देवानां देवम्बर्हिर्व्वीरितीनाँव्वायुद्वा क्रुविदङ्गऽऋतवस्त्यऽऋतुथाऽर्द्धमासाः परुᳯषि पृच्छा-मि त्वा परमियँव्वेदिर्द्देवानाम्भद्राः स्वस्ति नः शत-मिदेष च्छागऽऋतवस्ते यज्ञमिहैवाग्ने देवा दैव्यो-षासा नक्तादृति चतस्रऽएता उव ऽइम्मौल्लासो वह्वीनां पिता तीव्रान्घोषान्दिवः पृथिव्याः परीत्य भूतानि मे-धाम्मऽआतिष्ठन्तम् परी मा ऽ उ त्वाऽयᳬ सहस्रमु-त्तानायामव प्रातरग्निस्तुतेदानीमायासाय स्वाहा श-तमेकाधिकम् । १६ । अथ चतुष्पदाद्युदात्तमध्येऽनु-दात्तानि भवन्ति । ध्रूरसि धृष्टिरसि मयीदमग्ने गृह-पतेऽक्रन्कर्म्माऽदित्यास्त्वा नमो मित्रस्याग्ने व्रतपाः परि त्वा गिर्व्वणो गिरो देवतीरमद्वम्माऽह्विर्भूस्त्वा

ऽग्ग्ना ३ इ पलूवर्न्यां २ ॥ ऽआवह यज्ञयज्ञं देव स-
वितश्रीतरठै० हा भव ब्राजे वाजेऽवत सोमठै० रा
जानमग्ने सहस्व सोमस्य त्वाऽऽत्वा जिघर्म्मि परि त्वा
ऽग्ने सीद होतः सुजातो विप्राजसाऽहरहरप्रयावँ
विश्वस्य केतुरस्त्वाव्मिरिन्द्रँविश्वाऽसुन्न्वन्तमयज-
मानमोषधीरितीष्कृतिर्न्नामाग्ने तव श्रवो वयो भुवो
यज्ञस्य विश्ववस्मै प्राणाय काण्डात्काण्डात्प्ररोहन्त्य-
दित्या स्वाऽबोध्यग्निर्ज्जनस्य गोपास्त्वाञ्चित्रश्रवस्तमा-
ऽऽवाचऽउद्बुद्ध्यस्व नमस्तऽआयुधाय मीढुष्टम शिवत-
म नमस्ते हरसे यो देवानां चक्षुषः पिता बृहस्पते प-
रीन्द्रऽआसास्प्रेत मस्मीणि तऽउद्देनं दैव्याय धर्त्रे
क्रमध्वमग्निना व्राजाय स्वाहा विश्वस्य मूर्द्धन्नब्रह्म
क्षत्रस्या व्याग्रं सोमस्य रूपं यमश्विना यदत्र त्वया
हि नोऽग्निष्वात्ताः पितरऽआसीनासोऽअरुणीनां वे-
देन रूपे सरस्वती योन्न्यां तेजः पक्ष्मनांल्लोमानि प्र-
यतिर्हैव्याभिमाना वरुणः क्षत्रव्यस्मिन्नश्वासः स-
मिद्धोऽअग्निर्द्दुरो देवीर्य्यह्वासो यद्वरिणी इय-
न्नार्य्यस्ते केष्वन्तः कत्यस्यानो भद्द्रा यदूवद्यम् मा त्वा-
ऽग्निरर्यदश्वाय यत्ते सादे तँवस्तवायमेकया च न
त्वावान्तसमिधेन्द्रमिडाभिरिन्द्रन्दैव्या होतारा त्वष्टा
रमिन्द्रं समिधानस्महत्तनूपातमुद्भिदमीडेऽन्यमीडितं

